आशुश्रूषन् स मैथिल्या वार्त्तां हर्म्येषु रक्षसाम् ।
शीयमानान्धकारेषु समचारीदशङ्कितः ॥ ३६ ॥

---

दर्शयति दृश्यते यत् दर्शनं रूपं लङ्काया रूपमनुजिज्ञासतेव पूर्वेण प्राप्तस्यात्मनेपदस्य नानोर्ज्ञ इति प्रतिषेधः तमोपहास्तमोविध्वंसमानाः विमुक्ताः प्रेरिता अंशवो यस्मिन् उदय इति ॥ ३५ ॥ ज० म०

अन्वित्यादि । अथानन्तरमिन्दुना पूर्वस्यां दिशि उदैयत उदितम् इणो भावे घौ पूर्वस्यां दिशीत्युपादानेन इन्दोः पूर्णत्वं सूचितं कृष्णपक्षः सूचितो वा किङ्कुर्वता लङ्काया यद्दर्शनं हनूमतेत्यर्थात् तदनुज्ञातुमनुमन्तुमिच्छतेव चन्द्रोदये सत्येव हनूमता लङ्का द्रष्टव्येति तत्र तदनुमतिरुत्प्रेच्यते अन्ये तु दृश्यते इति दर्शनं रूपं लङ्काया रूपं ज्ञातुमिच्छतेवेत्याहुः स्मृदृशननुज्ञेत्यत्र अनुवर्जनान्न मं तमोऽपहा अन्धकारविध्वंसका विमुक्ताः प्रेरिता अंशवो यत्रेत्युदयक्रियाविशेषणं यद्यपि परमते क्तान्तस्य पूर्वनिपातो दृश्यते तथापि विमुक्तशब्दस्यात्र न पूर्वनिपातो गमकत्वात् अतएव ऐक्यं सोऽन्वये सतीत्युक्तं केचित् तु हन्तेर्भावे क्विप् तमोऽपहननाय विमुक्ता अंशवो यत्रेत्याहुः ॥ ३५ ॥ भ०

आश्वित्यादि । स कपिर्मैथिल्याः सीताया वार्त्तामाशुश्रूषन् श्रोतुमिच्छन् प्रत्याङ्भ्यां श्रुव इत्यात्मनेपदप्रतिषेधः । रक्षसां हर्म्येषु गृहेषु समचारीत् संक्रान्तवान् अतो लान्तस्येति वृद्धिः शीयमानान्धकारेषु अपगच्छत्तमःसु शदलृशातने शदेः शित इति तङ् पाघ्रेति शीयादेशः अशङ्कितः शङ्कारहितः ॥ ३६ ॥ ज० म०

आश्वित्यादि । हनूमान् मैथिल्या वार्त्तामाश्रोतुमिच्छन्

शतसाहस्रमारक्षं मध्यगं रक्षसां कपिः।
ददर्श यं कृतान्तोऽपि म्रियेतासाद्य भीषणम्॥ २७॥
अध्यासिसिषमाणेऽथ वियन्मध्यं निशाकरे।

---

रक्षसां हर्म्येषु सौधगृहेषु समचारीत् संचरति स्म तृतीया-योगाभावात् समस्त्येति न मं व्रजवदेति त्रिः स्मृ ट्प्रनतुत्र्न्-त्यादावाङ्वर्जनान्न मं कोटरेषु शीयमाना अपगच्छन्तोऽन्धकारा येभ्यः शदोऽपि ममिति मं अशङ्कितः निर्भयः कर्त्तरि क्तः अकर्मकत्वात् भावे क्तो वा शङ्का जाताऽस्येति इतोऽस्येति जात इति इतो वा॥ २६॥ भ०

शतेत्यादि। मध्यमं मध्यप्रकोष्ठगतम् आरक्षं गोपकं शतसाहस्रं रक्षसां लक्षमात्रं ददर्श विलोकितवान् शतसहस्रं परिमाणमस्येति प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति वचनात् शतमानविंशतिकेत्यादिना अणि संख्यायाः संवत्सरेत्युत्तरपदवृद्धिः। भीषणं भयानकम् आसाद्य प्राप्य कृतान्तोऽपि यमोऽपि म्रियेत प्राणान् सन्त्यजेत् म्रियतेर्लुङ्लिङोश्चेति तङ् तत्र हि शित इत्यनुवर्त्तते॥ २७॥ ज० म०

शतेत्यादि। कपिर्मध्यमं मध्यकोष्ठगतं रक्षसामारक्षं ददर्श शतसाहस्रं शतसहस्रं परिमाणमस्येति विकारसंघेत्यादिना तदस्य परिमाणमित्यर्थे ष्णः सुपञ्चालादित्वादुत्तरपदे वृद्धिः यं भीषणं भयङ्करम् आसाद्य प्राप्य कृतान्तोऽपि म्रियेत प्राणान् त्यजति किमुतान्यः विधिनिमन्त्रणेत्यादिना सम्भावनायां स्त्री स्वङ्शीव्येममिति मम्॥ २७॥ भ०

अध्येत्यादि। अथ निशाकरे चन्द्रमसि वियन्मध्ये अध्यासितुमारोढुमिच्छति सति पूर्ववत् सन इत्यात्मनेपदम् आस्ते-

काशाञ्चक्रे पुरी सौधैरतीवोद्भासिभिः सितैः ॥ ४८ ॥
इन्दुञ्चषकसंक्रान्तमुपायुङ्क्त यथामृतम् ।
प्रयुञ्जानः प्रियावाचः समाजानुरतो जनः ॥ ३९ ॥

---

रनुदात्तत्वमात्मनेपदनिमित्तं तेनैव सनन्तादपि भवति अत्र सनि इटि कृते अजादेर्द्वितीयस्येति द्विर्वचनं पुरी लङ्का काशाञ्चक्रे शोभते स्म सौधैः सौधानां ज्योत्स्नया चोद्भास्यमानत्वात् आम्प्रत्ययवदिति तङ् ॥ ३८ ॥ ज० म०

अध्येत्यादि। अथानन्तरं निशाकरे चन्द्रे आकाशस्य मध्यमध्यासितुमारोढुमिच्छति सति पुरी लङ्का सौधैः गृहविशेषैः काशाञ्चक्रे शुशुभे काशृङ् कुशब्द इत्यस्यानेकार्थत्वात् दीप्त्यर्थता काशृङ्दीप्तौ दन्त्यान्तोऽस्तीति विद्यासागरः। केचित् तु काशाञ्चक्र इति तालव्यसकारवान् पाठः काशृङ् द्युताविल्यस्य रूपं वदन्ति ॥ ३८ ॥ भ०

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतो जनः चषकसंक्रान्तं मद्यभाजने प्रतिविम्बेन संक्रान्तमिन्दुमुपायुङ्क्त उपभुक्तवान् प्रतिविम्बावच्छिन्नस्य मद्यस्योपलक्ष्यमाणत्वादेवमुक्तं यथाऽमृतम् अमृतमिव प्रिया अनुकूला वाचः प्रयुञ्जानः अभिदधानः प्रोपाभ्यामिति तङ् ॥ ३९ ॥ ज० म०

इन्दुमित्यादि। एवं शोभितायां लङ्कायां समाजानुरतः पानगोष्ठीरतो जनश्चषकसंक्रान्तं मद्यपात्रे प्रतिविम्बेन सङ्गतं चन्द्रमुपायुङ्क्त दर्शनादिक्रियाव्याप्यं चकार चन्द्रस्योपयोगो दर्शनादिरूप एव जयमङ्गलायान्तु चन्द्रमुपायुङ्क्त बुभुजे चन्द्रशब्देन तत्प्रतिविम्बावच्छिन्नमद्यभागस्य लक्षितत्वात् यथामृतमिवेत्युक्तं किं कुर्वन् यथामृतं तद्वत् प्रिया वाचः

संक्षुवान इवोत्कण्ठामुपाभुङ्क्त सुरामलम्।
ज्योत्स्नायां विगलन्मानस्तरुणो रक्षसां गणः॥ ४०॥
मध्वपाययत स्वच्छं सोत्पलं दयितान्तिके।
आत्मानं सुरताभोगविस्रम्भोत्पादनं मुहुः॥ ४१॥

---

प्रयुञ्जानः पीयतामित्याद्यनुकूलवाचोऽभिदधानः युजिर उद्यच इति मं महाकाव्योचितं मधुपानवर्णनमिदम्॥ ३९॥ भ०

संक्षुवान इत्यादि। रक्षसां तरुणो गणः उत्कण्ठां प्रियासु संस्मरणं संक्षुवान इव समुत्तेजयन्निव समः क्षुव इति तङ् ज्योत्स्नायां सुरां अलम्पर्य्याप्तमुपाभुङ्क्त अभ्याहृतवान् भुजोऽनवन इति तङ् विगलन्मानः॥ ४०॥ ज० म०

संक्षुवान इत्यादि। तरुणो युवा रक्षसां गणः उत्कण्ठां प्रियाभिलाषं संक्षुवान इव समुत्तेजयन्निव ज्योत्स्नायां सुरां मदिरां अलमत्यर्थम् उपाभुङ्क्त भक्षितवान् सुरापानादेव विगलन्मानः अपगतमानः संक्ष्णोः भुजोऽशने इति मं उत्कण्ठोक्ताऽनवाप्तौ योऽभिलाषस्तदवाप्तये इति॥ ४०॥ भ०

मध्वित्यादि। कीदृशं मधु स्वच्छत्वात् सोत्पलतया सुरभित्वात् शोभनं जातं यतः स्वयमात्मानं मुहुरपाययत पायितवत् घेरणाविति तङ् दयितान्तिके दयितस्य समीपे सुरताभोगः सुरतविमर्दः तत्र विस्रम्भः तस्योत्पादनं जनकं उत्पादयतीति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट्॥ ४१॥ ज० म०

मध्वित्यादि। रक्षसां गणो दयितान्तिके रमणीसमीपे आत्मानं मधु मुहुर्वारं वारम् अपाययत विन्त्रान्तपिबेति मं यद्वा मध्वेव कर्तृभूतमात्मानम् अपाययत् निःस्पृहमपि रक्षोगणं सुरापानमकारयत् मधुगुणादेव पानात् वेढैं ऽजीघे

अभीषयन्त ये शक्रं राक्षसा रणपण्डिताः ।
अविस्मापयमानस्तान् कपिराटीद् गृहाद् गृहम् ॥४२॥
सीतां दिदृक्षुः प्रच्छन्नः सोऽगर्द्धयत राक्षसान् ।
अवञ्चयत मायाश्च स्वमायाभिर्नरद्विषाम् ॥ ४३ ॥

---

इति मं अञौ मधुनः कर्मत्वात् । मधु कोष्टम्ं स्वच्छं निर्मलं सोत्पलं प्रियाक्षोत्पलप्रतिविम्बात् सौरभाय प्रक्षिप्तोत्पलं वा सुरताभोगे सुरतविमर्दे विस्रम्भस्य विश्वासस्य उत्पादनं जनकं कभावेऽस्मीति कर्त्तरि अनट् भावेऽनटि रूपकालङ्कारो वा न नन्द्यादित्वाद्वाऽनः । उत्पादनक्षममिति पाठस्तु सुगम एव ॥ ४२ ॥ भ०

अभीत्यादि । एवं रक्षःसु यथायथं चेष्टमानेषु ये राक्षसा रणपण्डिताः संग्रामविज्ञाः शक्रमभीषयन्त: भीषितवन्तः भोःभ्योर्हेतुभय इति तङ् भियो हेतुभये षुक् भयग्रहणमुपलक्षणं तेन स्मयतेरपि भवति तानसौ कपिरविस्मापयमानः विस्मयमकारयन् नित्यं स्मयतेरित्यात्वं गृहात् गृहमाटीत् गतवान् लुङि रूपम् ॥ ४२ ॥ ज० म०

अभीषयन्तेत्यादि । रणे पण्डिताः कुशला ये राक्षसाः शक्रून् अभीषयन्त त्रासितवन्तः तान् अविस्मापयमानः विस्मितान्न कारयन् मधुपानाद्यासक्तया तैरविज्ञात इति भावः असौ कपिर्गृहात् एकस्मात् गृहमपरमाटीत् जगाम भीर्भीष् वेति ञौ मं भीयादेशस्त्र अत घाद्वर्थे इत्यनुवर्त्तते अत ध्वर्थोभयन्तु राक्षसकर्तृत एव स्मिङः स्मिभ्योर्घाद्वर्थे मश्चेति ञौ इकारस्यात्वं मश्च अटेभ्यां सिः ॥ ४२ ॥ भ०

सीतामित्यादि । स कपिः सीतां दिदृक्षुः सीतां द्रष्टुमिच्छुः प्रच्छन्नः राक्षसानगर्द्धयत व्यामोहयत् स्वमायाभिश्च

अपलापयमानस्य शत्रूंस्तस्याभवन् मतिः।
मिथ्या कारयते चारैर्घोषणां राक्षसाधिपः॥ ४४॥

---

नरद्विषां मायाश्च अवञ्चयत अतिसंहृतवान् गृधिवञ्च्योः प्रलम्भन इति तङ्॥ ४३॥ ज० म०

सीतामित्यादि। सीतां दिदृक्षुर्द्रष्टुमिच्छुः प्रच्छन्नो गुप्तः स कपिः राक्षसान् अगर्द्धयत व्यामोहयत् स्वमायाभिर्नरद्विषां राक्षसानां मायाश्च अवञ्चयत वृथा चकार प्रतारे वञ्चिगर्द्धेरिति म॑ प्रतारो विसंवादनं मिथ्याख्यानमिति केचित्॥ ४३॥ भ०

अपेत्यादि। तस्य कपेः शत्रून् राक्षसान् अपलापयमानस्य न्यक्कुर्वतः विभाषा लीयतेरित्यात्वे लियः सम्माने-त्यादिना शालिनीकरणे न्यग्भावने आत्मनेपदं मतिरभवत्। कीदृशीत्याह मिथ्याकारयत इति अयं राक्षसाधिपतिश्चारैर्दण्डवाहकैः यां घोषणां पुनः पुनः कारयति जागृत जागृतेति तां मिथ्या कारयते येनाहमविज्ञात एव प्रविष्टः मिथ्योपपदात् कृञोऽभ्यास इति तङ् अभ्यासश्च पुनः पुनः करणम्॥ ४४॥ ज० म०

अपेत्यादि। शत्रून् राक्षसान् अपलापयमानस्य वञ्चयमानस्य तस्य कपेरित्थं मतिरभवत् मिथ्योरिति लियोऽ्डा पूजाभिभवे च लापेरिति चकारात् प्रतारे म॑ कीदृशी मतिरित्याह राक्षसाधिपो रावणश्चारैर्घोषणां मिथ्या कारयते जागृत जागृतेत्युच्चैर्घुष्टं मिथ्यैव चारैः कारयति तां कर्त्तुं चरान् पुनः पुनः प्रयुङ्क्ते निष्फलमिव येनाहमविज्ञात एव भ्रमामि मिथ्याकारेरभ्यास इति म॑ अभ्यासः पौनःपुन्यं चर एव चारः स्वार्थे ण्यः॥ ४४॥ भ०

गूहमानः स्वमाहात्म्यमटित्वा मन्त्रिसंसदः ।
नृभ्योऽपवदमानस्य रावणस्य गृहं ययौ ॥ ४५ ॥
दिशो द्योतयमानाभिर्दिव्यनारीभिराकुलम् ।
श्रियमायच्छमानाभिरुत्तमाभिरनुत्तमाम् ॥ ४६ ॥

---

गूहेत्यादि । स्वमाहात्म्यं स्वपराक्रमं गूहमानः आहृण्वन् उदुपधायागोह इत्यूत्त्वं स्वरितञित इति तङ् अटित्वा मन्त्रिसंसदः शुकसारणादिगृहाणि गत्वा रावणस्य गृहं ययौ कीदृशस्य नृभ्योऽपवादमानस्य कुप्यतः असूयतो वा अपाद्वद इति तङ् नृभ्य इति क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी ॥ ४५ ॥ ज० म०

गूहेत्यादि । असौ स्वमाहात्म्यं स्वपराक्रमं गूहमानः संवृण्वन् मन्त्रिणां संसदो गृहाणि अटित्वा गत्वा रावणस्य गृहं ययौ कीदृशस्य नृभ्योऽपवादमानस्य असूयतः जिन्जग्न्तापिबेत्यादिना अपवदेर्मं यस्मै दित्सेत्यादिना असूयार्थे न सम्प्रदानत्वं गुहूञ संवृत्तौ उभयपदी णुर्घूङ इति गुणः गुहोणोरूरित्योकारस्य ऊत्वम् ॥ ४५ ॥ भ०

कीदृशं गृहमित्याह । दिश इत्यादि । दिशः द्योतयमानाभिः भासयमानाभिः णिचश्चेति तङ् दिव्यनारीभिः उत्तमाभिः प्रधाननायिकाभिराकुलं व्याप्तं श्रियमनुत्तमामतिशयवतीं आयच्छमानाभिः स्वीकुर्वाणाभिः समुदाङ्भ्य इति तङ् ॥ ४६ ॥ ज० म०

दिश इत्यादि । कीदृशं गृहं ययौ दिव्यनारीभिर्दिविभवाभिः स्त्रीभिराकुलं व्याप्तम् । कीदृशीभिः दिशो द्योतयमानाभिः भासयमानाभिः जग्न्तत्वादुभयदं उत्तमाभिः श्रेष्ठाभिः अनुत्तमां अत्युत्कृष्टां श्रियं आयच्छमानाभिः स्वीकुर्वाणाभिः

नित्यमुद्यच्छमानाभिः स्मरसम्भोगकर्मसु ।
जानानाभिरलं लीलाकिलकिञ्चितविभ्रमान् ॥४७॥
स्वं कर्म कारयन्नास्ते निश्चिन्तो या झषध्वजः ।
स्वार्थं कारयमाणाभिर्यूनो मदविमोहितान् ॥ ४८ ॥

---

जिन्त्रन्तेत्यादिना आङ्पूर्वयमो मं न विद्यते उत्तमं यस्या इति विग्रहः उत्तमोऽनुत्तमं विद्यादिति द्विरूपकोषः ॥ ४६॥ भ०

नित्येत्यादि। स्मरसम्भोगकर्मसु कामोपभोगक्रियासु नित्यमुद्यच्छमानाभिः पूर्ववत्तङ् लीलाः स्त्रीणां शृङ्गारचेष्टा-विशेषाः। तथाचोक्तं "लीलाः सलीलाः किलकिञ्चितानि विब्बोकमाप्यायितविभ्रमाणि। विच्छित्तिमाकुट्टमितेञ्चितानि योज्यानि तज्ज्ञैः सुकुमारनृत्ये ॥" इति लक्षणञ्चैषां नृत्य-शास्त्रे ॥ ४७ ॥ ज० म०

नित्यमित्यादि। कीदृशीभिः सुरतसम्भोगकर्मसु कामो-पभोगक्रियासु नित्यमुद्यच्छमानाभिः उद्यमं कुर्वतीभिः जिन्-त्रन्तेत्यादिना उत्पूर्वयमो मं लीलाकिलकिञ्चितविभ्रमान् शृङ्गारचेष्टाविशेषान् अलमत्यर्थं जानानाभिः पूर्ववत् अगिज्ञो मं प्रियानुकरणे लीलावेशभाषाविचेष्टितैः "क्रोधाश्रुहर्षभी-त्यादेः सङ्करः किलकिञ्चितम्। विभ्रमस्त्वरया काले भूषा-स्थानविपर्ययः" ईदृशीभिर्दिव्यनारीभिराकुलं गृहं ययाविति सम्बन्धः ॥ ४७ ॥ भ०

स्वमित्यादि। स्वमात्मीयं मोहनादिकर्म दिव्यनारीः कारयन् अनुष्ठापयन् एष झषध्वजः कामदेवः निश्चिन्त आस्ते ताभिराकुलमिति योज्यं हृक्रोरन्यतरस्यामिति द्विकर्मकता यूनः स्वार्थं स्वप्रयोजनं मैथुनाख्यङ्कारयमाणाभिः आकुलं तान्

कान्तिं स्वां वहमानाभिर्यजन्तीभिः स्वविग्रहान्।
नेत्रैरिव पिबन्तीभिः पश्यतां चित्तसंहतीः॥ ४९॥

---

हनूमानिति वक्ष्यमाणेन सम्बन्धः। कीदृशान् मदविमोहितान् मधुपानमदपरवशान् ताभिः॥ ४८॥ ज० म०

स्वमित्यादि। या दिव्यनारीः स्वं कर्म मोहनादि कारयन् झषध्वजः कामो निश्चिन्तो निराकुलः सन्नास्ते यासां काम एवास्ति न चिन्ता तद्विरोधिनी ताभिराकुलं गृहं ययौ घोऽजौजेरित्यादिना प्रयोज्यस्य कर्मत्वं मदेन विमोहितान् यूनस्तरुणान् स्वार्थं स्वप्रयोजनं कारयमाणाभिः अन्तस्योभयपदित्वात् शदृशानौ दर्शितौ॥ ४८॥ भ०

कीदृशीभिरित्याह। कान्तिमित्यादि। स्वां कान्तिं शोभां वहमानाभिः यजन्तीभिः स्वविग्रहान् ददतीभिः कामिभ्यः तत्र स्वं कर्मेति णिचश्चेत्यस्य विषयः कान्तिं स्वां स्वविग्रहानिति स्वरितेत इत्यस्य विषयः विभाषोपपदेन प्रतीयमान इति विभाषा आत्मनेपदं इत्यात्मनेपदाधिकारः शेषभूतत्वात् परस्मैपदविधानमाह नेत्रैरिति पश्यतां चित्तसंहतीः चित्तसन्दोहान् पिबन्तीभिरिव गृह्णन्तीभिरिव शेषात् कर्त्तरि परस्मैपदम्॥ ४९॥ ज० न०

कान्तिमित्यादि। स्वां कान्तिं वहमानाभिः धारयन्तीभिः वहीञ्प्रापणे ञिन्‌त्वात्‌पिवेति फलवत्कर्त्तरि मं मन्मथेनार्पिता छाया सैव कान्तिरिति स्मृता। स्वविग्रहान् स्वदेहान् यजन्तीभिः कामिभ्यो ददतीभिः यजेर्देवार्चादानसङ्गतिकृतौ ञिन्‌त्वात्त्वादौ ञिद्धातोः फलवत्कर्त्तर्य्यात्मनेपदस्यानित्यत्वं मित्यत्वे हि नवशः पमे इत्यनेन ञिद्धातोरुभयपदकथनमनर्थकं स्यात् फलवत्कर्तृनियमितात्मनेप-

ता हनूमान् पराकुर्वन्नगमत् पुष्पकं प्रति ।
विमानं मन्दरस्याद्रेरनुकुर्वन्निव श्रियम् ॥ ५० ॥

---

दादन्यत्र परस्मैपदस्य गम्यमानत्वात् टीव्येममिति नियमादन्यत्र किं परस्मैपदं न गम्यते तेनात्र यजेः फलवत्कर्त्त्र्यपि परस्मैपदं फलवत्कर्त्तरि आत्मनेपदमेव अन्यत्रोभयपदमिति नवशः पमे ञितइत्यस्य साफल्यमिति चेत् क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् नवशः पमे ञित इत्यनेनोभयपदित्वं विद्यासागरस्तु फलवत्त्वाविवक्षायां पदं संस्कृत्य पश्चात् स्वशब्दादिसम्बन्धात् वाक्ये क्रियाफलस्य कर्त्रन्वयो गम्यत इत्याह अपरे तु कर्त्तभिप्रायेऽपि क्रियाफले विभाषोपपदेन प्रतीयमान इति सूत्रेण पक्षे आत्मनेपदाभावमाहुः । इत्यात्मनेपदाधिकारः । अथ परस्मैपदमुच्यते । पश्यतां जनानां चित्तसमूहान् नेत्रैरिव पिबन्तीभिः स्त्रीभिराकुलं गृहं ययावित्यन्वयः पापाने नवशः पमे इति पं शतृः ॥ ४९ ॥ भ०

ता इत्यादि । ता दिव्यनारीः पराकुर्वन्नपक्षिपन् अगमत् पुष्पकं प्रति पुष्पकविमानं प्रति पुष्पकविमानेन जगाम । कीदृशं मन्दरस्याद्रेः श्रियमनुकुर्वन्निव अनुपराभ्यां कृञः कर्त्रभिप्राये चात्मनेपदस्य प्राप्तत्वात् ॥ ५० ॥ ज० म०

ता इत्यादि । हनूमान् ता दिव्यनारीः पराकुर्वन् विक्षिपन् पुष्पकनामानं विमानं प्रति लक्षीकृत्य अगमत् । कीदृशं मन्दरनाम्नोऽद्रेः श्रियमनुकुर्वन्निव स्वश्रिया सदृशीकुर्वन्निव कृञो ञित्त्वादुभयपदप्राप्ते घे पं परेति पं ता इत्यत्र तान् इति पठित्वा यान् यूनः स्वार्थं कारयमाणाभिराकुलं गृहं ययौ

तस्मिन् कैलाससङ्काशं शिरःशृङ्गं भुजद्रुमम् ।
अभिक्षिपन्तमैक्षिष्ट रावणं पर्वतश्रियम् ॥ ५१ ॥
प्रवहन्तं सदामोदं सुप्तं परिजनान्वितम् ।
मघोने परिमृष्यन्तमारमन्तं परं स्मरे ॥ ५२ ॥

---

तान् पराकुर्वन्निति तृतीयश्लोकेनान्वयो जयमङ्गलायामुक्तः । व्योमयानं विमानोऽस्त्रीत्यमरः ॥ ५० ॥ भ०

तस्मिन्नित्यादि । तस्मिन् विमाने रावणमैक्षिष्ट कैलाससङ्काशं कैलासतुल्यं शिरःशृङ्गं शिरांसि शृङ्गाणीव यस्य भुजद्रुमं भुजा द्रुमा इव यस्य तं पर्वतस्य श्रियोऽभिक्षिपन्तम् अभिभवन्तम् अभिप्रत्यतिभ्यः क्षिप इति परस्मैपदं तस्य स्वरितेत्त्वात् कर्त्रभिप्राय आत्मनेपदं प्राप्तम् ॥ ५१ ॥ ज० म०

तस्मिन्नित्यादि । हनूमान् तस्मिन् विमाने रावणमैक्षिष्ट दृष्टवान् । कीदृशं कैलाससङ्काशं कैलासतुल्यं तुल्यतां दर्शयति शिरांसि शृङ्गाणीव यस्य भुजाश्च द्रुमा इव यस्य तादृशं अन्येषां पर्वतानां श्रियम् अभिक्षिपन्तम् अभिभवन्तं घे पमित्यादौ प्रत्यभ्यतिक्षिपेति मं कैलासेति केलिः प्रयोजनमस्येति विकारसंघेत्यादिना ष्णे कैलः आस्यतेऽस्मिन्नित्यासः पश्चात् कर्मधारयः केलीनां समूहः कैलं पूर्ववत् ष्णः तस्यास इति वा ॥ ५१ ॥ भ०

प्रवहेत्यादि । सदामोदं कस्तूरिकादिपरिमलं प्रवहन्तं प्राद्वह इति परस्मैपदं स्वरितेत्त्वात् सुप्तं शयने संविष्टं परिजनान्वितं पारिपार्श्विकाधिष्ठितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं परेर्मृष इति परस्मैपदं मृषेः स्वरितेत्त्वात् क्रुधद्रुहेति सम्प्रदानसंज्ञायां चतुर्थी स्मरे कामे परमत्यर्थं आरमन्तं सक्तिं

व्यरमत् प्रधनाद् यस्मात् परित्रस्तः सहस्रदृक् ।
क्षणं पर्य्यरमत्तस्य दर्शनान्मारुतात्मजः ॥ ५३ ॥
उपारंसीच्च संपश्यन् वानरस्तं चिकीर्षितात् ।

---

कुर्वाणं व्याङ्परिभ्यो रम इति परस्मैपदं रमेरनुदात्तेत्त्वात् ॥ ५२ ॥ ज० म०

प्रवहन्तमित्यादि । कीदृशं रावणं सन्तमुत्कृष्टं आमोदं कस्तूरिकादिपरिमलं सदा सर्वदा वा आमोदं प्रवहन्तं घे पमित्यादौ प्रवहेति पं सुप्तं शयानं परिजनैः पारिपार्श्विकै-रन्वितं मघोने इन्द्राय परिमृष्यन्तं असूयन्तं घे पमित्यादौ परिमृषेति पं यस्मै दित्सेत्यादिना संप्रदानत्वं स्मरे कामे परमत्यर्थं आरमन्तं क्रीडन्तं घे पमित्यादौ व्यापरिरम इति पम् ॥ ५२ ॥ भ०

व्यरेत्यादि । यस्माद्रावणात् सहस्रदृगिन्द्रः परित्रस्तः भीत्रार्थानामित्यपादाने पञ्चमी प्रधनात् युद्धात् व्यरमत् उपरतव्यापारोऽभूत् व्याङ्परिभ्यो रम इति परस्मैपदं जुगु-प्साविरामप्रमादार्थानामपादाने पञ्चमी तस्य दर्शनान्मारुता-त्मजः हनूमान् क्षणं पर्य्यरमत् तुष्टिमानभवदित्यर्थः साधु रावणेति पूर्ववल्लङः परस्मैपदम् ॥ ५३ ॥ ज० म०

व्यरमदित्यादि । सहस्रदृगिन्द्रो यस्मात् रावणात् परि-त्रस्तो भीतः सन् प्रधनात् युद्धात् व्यरमत् उपरतोऽभूत् यतो-ऽपायेत्यादिना भीविरामयोरपादानं पूर्ववत् पं सहस्रदृगिति पदोपन्यासो युक्तः परित्रस्तस्य सर्वत्र प्रेरितनेत्रत्वात् तस्य दर्शनात् मारुतात्मजो हनूमान् क्षणं पर्य्यरमत् तुष्टोऽभवत् पूर्ववत् पम् ॥ ५३ ॥ भ०

उपेत्यादि । तं रावणं पश्यन् वानरः चिकीर्षितात् कर्त्तु-

रम्य मेरुमिवाधूतकाननं श्वसनोर्मिभिः ॥ ५४ ॥
दृष्ट्वा दयितया साकं रहीभूतं दशाननम्।
नात्र सीतेत्युपारंस्त दुर्मना वायुसम्भवः ॥ ५५ ॥

---

मिष्टात् सीतान्वेषणादुपारंसीत् निवृत्तः उपाच्चेत्यधिकृत्य विभाषाकर्मकादिति लुङः परस्मैपदं तस्य मेरोरिव रम्यत्वात् यदाह मेरुमिव श्वसनोर्मिभिः वातसमूहैः आधूतकाननं प्रचलितवनं मेरुं तथा श्वसितकल्लोलैः आधूतानि शिरांस्याननानि च यस्येति ॥ ५४ ॥ ज० म०

उपेत्यादि। वानरस्तं रावणं संपश्यन् चिकीर्षितात् कर्त्तुमिष्टात् सीतान्वेषणादपि उपारंसीत् निवृत्तः घे मित्यादौ वातूपरम इति पचेपं यमरमेति इम्सनौ मेरुवत् रम्यं श्वसनोर्मिभिर्निःश्वासवेगैराधूतानि ईषत्कम्पितानि काननानि गृहाणि येन कानि शिरांसि आननानि च यस्येति वा मेरुपक्षे श्वसनोर्मिभिर्वायुवेगैराधूतानि काननानि वनानि यत्र। ऊर्मिस्तरङ्गे पीड़ायां वेगे सङ्गप्रकाशयोः। काननं विपिने गेहे परमेष्ठिमुखेऽपि चेति विश्वः। कं शिरोऽम्बुनोरित्यमरः ॥ ५४ ॥ भ०

दृष्ट्वेत्यादि। रहीभूतं विजनस्थं दशाननं अरुर्मनश्चक्षुरित्यादिना च्वौ सलोपः दयितया साकं दृष्ट्वा मात्र सीतेति कृत्वा उपारंस्त विमना निवर्त्तते स्म विभाषाकर्मकादिति तङ् वायुसम्भवो हनूमान् ॥ ५५ ॥ ज० म०

दृष्ट्वेत्यादि। दयितया साकं सह रहीभूतं विजनदेशस्थं दशाननं दृष्ट्वा अत्र सीता नास्तीति ज्ञात्वा दुर्मना दुःखितचित्तो वायुसम्भवो हनूमान् उपारंस्त निवर्त्तते स्म तस्माद्देः

ततः प्राकारमारोहत् क्षपाटानविबोधयन्।
नायोधयत् समर्थोऽपि सीतादर्शनलालसः॥ ५६॥
अध्यासीद्राघवस्याहं नाशयेयं कथं शुचः।
वैदेह्या जनयेयं वा कथमानन्दमुत्तमम्॥ ५७॥

---

शादित्यर्थात् पूर्ववत् पक्षे मं अस्हसि रहसि भवन्तमिति मनश्चक्षुरित्यादिना सलोपः॥ ५५॥ भ०

तत इत्यादि। तत उत्तरकालं प्राकारमारोहत् आरूढ़वान् क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् णिचश्चेत्यात्मनेपदे प्राप्ते बुधयुधेत्यादिना वा लटः परस्मैपदं बुधेरणौ सकर्मकस्य चित्तवत्कर्तृकत्वात् हनूमतश्चित्तवत्त्वात् तत्र ह्यकर्मका ये तेषामन्वितवत्कर्तृत्वार्थमुपादानमित्युक्तं तान्नायोधयत् समर्थोऽपि न संग्रामितवान् यतः सीतादर्शनलम्पटः अणावकर्मकादित्यनेन उभयत्रापि लङः परस्मैपदं युधेरेकस्याचित्तवत्कर्तृकत्वात्॥ ५६॥ ज० म०

तत इत्यादि। ततोऽनन्तरं हनुमान् प्राकारमारोहत् आरूढ़वान्। किं कुर्वन् क्षपाटान् राक्षसान् अविबोधयन् अचेतयन् समर्थोऽप्यसौ तान् नायोधयत् सीतायाः दर्शने लालसो महाभिलाषोऽस्य ञ्यन्तादुभयपदे प्राप्ते कम्पान्नार्थेङित्यादिना पम्॥ ५६॥ भ०

अध्येत्यादि। राघवस्याहं कथं केन प्रकारेण शुचं शोकं नाशयेयं कथं वा वैदेह्याः सीताया आनन्दं जनयेयमिति हनूमानध्यासीत् चिन्तितवान् ध्यैचिन्तायामित्यस्य लुङि रूपं नशिजन्योरकर्मकत्वात् अणावित्यनेन लिङः परस्मैपदं नबुधेत्यादिना जनिजृषित्यादिना जनेर्मित्संज्ञायां ह्रस्वत्वम्॥ ५७॥ ज० म०

दृष्ट्वा राघवकान्तां तां द्रावयिष्यामि राक्षसान् ।
तस्या हि दर्शनात् पूर्वं विक्रमः कार्य्यनाशकृत् ॥ ५८ ॥
चिन्तयन्नित्थमुत्तुङ्गैः प्लावयन्तीं दिवं वनैः ।
अशोकवनिकामारादपश्यत् स्तवकाचिताम् ॥ ५९ ॥

---

अध्यैत्यादि । अहं राघवस्य शुचः शोकान् केन प्रकारेण नाशयेयं कथं वा वैदेह्याः सीताया उत्तममानन्दं जनयेयम् इति हनूमान् अध्यासीत् चिन्तितवान् ध्यै चिन्तायाम् एचोऽशित्या यमरमेति इमसनौ जरन्तनशजनाभ्यां कम्पानार्थं इत्यादिना पं जपेर्घटादिजनीति ह्रस्वः ॥५७॥ भ०

दृष्ट्वेत्यादि । इयमसाविति राघवस्य कान्तां दृष्ट्वा द्रावयिष्यामि राक्षसान् पलाययिष्यामि अत्र अणावित्यनेन नबुधेत्यादिना तस्याकर्मकस्य चित्तवत्कर्त्तृकत्वात् । हि यस्मात् हि यस्मात् तस्याः सीताया दर्शनात् पूर्वं विक्रमः कार्य्यस्य सीतादर्शनरूपस्य नाशकृत् ॥ ५८ ॥ ज० म०

दृष्ट्वेत्यादि । तां राघवस्य कान्तां सीतां दृष्ट्वा अहं राक्षसान् द्रावयिष्यामि पलायनपरान् करिष्यामीति पूर्ववत् पं हि यस्मात् तस्य राघवस्य कान्ताया दर्शनात् पूर्वकालं विक्रमः कार्य्यस्य सीतादर्शनस्य नाशमभावं करिष्यति इत्थं चिन्तयन्निति वक्ष्यमाणश्लोकेनान्वयः ॥ ५८ ॥ भ०

चिन्तेत्यादि । इत्थं पूर्वोक्तप्रकारेण चिन्तयन्नारात्समीपे अशोकवनिकामपश्यत् उत्तुङ्गैरुच्चैर्वनैर्दिवमाकाशं प्लावयन्तीं व्याप्नुवानां बुधयुधेत्यादिना तिप् प्रवतेरकर्मकस्यान्वितत्वात् स्तवकाचिताम् अशोकपुष्पस्तवकैः छन्नाम् ॥५९॥ज०म०

चिन्तेत्यादि । इत्थं पूर्वोक्तप्रकारेण चिन्तयन् आरात् समीपेऽशोकवनिकाम् अपश्यत् । कीदृशो उत्तुङ्गैरुच्चैर्वनैर्दिव-

तां प्राविशत् कपिव्याघ्रस्तरूनचलयन् शनैः ।
अत्रासयन् वनेशयान् सुप्तान् शाखासु पक्षिणः ॥ ६० ॥
अवाद्वायुः शनैर्यस्यां लतां नर्त्तयमानवत् ।

---

माकाशं प्लावयन्तीं व्याप्नुवतीं पूर्ववत् पं नगैरिति पाठे नगै-र्वृक्षैरित्यर्थः स्तवकैः पुष्पगुच्छकैराचितां व्याप्ताम् ॥ ५९ ॥ भ०

तामित्यादि । तामशोकवनिकां कपिव्याघ्रः कपिर्व्याघ्र इव शनैर्मन्दं प्राविशत् तरूनचलयन् अकम्पयन् चलेरकर्म-कत्वाच्चित्तवत्कर्तृकादणावित्यनेन च लटः परस्मैपदं ननिगर-णेत्यादिना तद्धि तत्र सकर्मकार्थं अचित्तवत्कर्तृकार्थञ्चेत्युक्तं वनशयान् पक्षिणः शाखासु सुप्तान् अत्रासयन् अणावित्यनेन परस्मैपदं वने शेरत इति अधिकरणे शेतेरित्यच् शयवास-वासिष्वकालादिना सप्तम्या विभाषा अलुक् ॥ ६० ॥ ज० म०

तामित्यादि । कपिव्याघ्रः कपिश्रेष्ठो हनूमान् तामशो-कवनिकां शनैर्मन्दं प्राविशत् किङ्कुर्वन् तरून् अचलयन् अक-म्पयन् पूर्ववत् पं घटादित्वात् ह्रस्वः वनेशयान् वनचरान् शाखासु सुप्तान् पक्षिणोऽत्रासयन् कम्पात्रार्थेङित्यादिना अजिप्राणिघाढादिति पं वने शेते इति पचादित्वादन् अभि-धानात् सप्तम्या अलुक् असमासेऽपि न च्युतिः अकालवाचिनः शयवासवासिषु इति सप्तम्या अलुगिति परः एओसुद्रा अव-खमिति आविलद्ध इति वचनात् ने इत्यस्य लघुत्वं गुरुत्वे जिह्वाकष्टं वनशयानिति केचित् पठन्ति अकालवाचिन इत्यादि परसूत्रस्यानित्यत्वेन विभक्तिलोपात् ॥ ६० ॥ भ०

अवादित्यादि । यस्यामशोकवनिकायां वायुर्वातः शनैर्म-न्दमवात् वाति स्म तामाटेति वक्ष्यमाणेन सम्बन्धः लतां नर्त्तयमानवत् नृत्यमिव कारयन् नृतिस्खलने वर्त्तते ततश्च

नायासयन्त सन्त्रस्ता ऋतवोऽन्योन्यसम्पदः ॥ ६१ ॥
ज्योत्स्नामृतं शशी यस्यां वापीर्विकसितोत्पलाः ।
अपाययत सम्पूर्णः सदा दशमुखाज्ञया ॥ ६२ ॥

---

निगरणेत्यादिना परस्मैपदं प्राप्तं नपादमीत्यादिना प्रतिषिद्धं ऋतवोऽन्योन्यं सम्पदं परस्परस्य विभूतिं नायासयन्त नापपीड़यन्ति स्म सन्त्रस्ता रावणात् आङ्पूर्वाद्यसेः चित्तवत्कर्तृकत्वात् अणावित्यादिना परस्मैपदं प्राप्तं नपादमीत्यादिना प्रतिसिद्धम् ॥ ६१ ॥ ज० म०

अवादित्यादि। यस्यामशोकवनिकायां वायुः शाखाभङ्गभयात् शनैर्मन्दम् अवात् वाति स्म ता प्राविशदिति पूर्वेण तामाटेनि वक्ष्यमाणेन वा सम्बन्धः लतां नर्त्तयमान इव भिन्नग्रन्त्येत्यनेन फलवत्कर्त्तरि मं फलवत्कर्तृत्वाभावे तु नृतेः कम्पार्थत्वात् परस्मैपदं स्यादिति पुरुषोत्तमः यत्र रावणात् संत्रस्ता भीता ऋतवो वसन्तादयः परस्परसम्हीनं आयासयन्त न पीडयन्ति स्म अजि प्राणिबाढाच्चेति प्राप्ते पूर्ववन्नं ॥ ६१ ॥ भ०

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया शशी सदा संपूर्णः सन् ज्योत्स्नामृतं वापीरपाययत पायितवान् निगरणार्थत्वात्तिपि प्राप्ते नपादमीत्यादिना प्रतिषिद्धे णिचश्चेति तङ् ॥ ६२ ॥ ज० म०

ज्योत्स्नेत्यादि। यस्यां रावणाज्ञया सदा सम्पूर्णः शशी ज्योत्स्नारूपममृतं वापीर्ह्रदीर्घिका अपाययत पायितवान् अन्नार्थत्वात् पे प्राप्ते पूर्ववन्नं शाच्छासाह्वेत्यादिना यन् अत एव विकसितानि उत्पलानि यासु तास्तथा ज्योतिरस्याम् अस्तीति ज्योत्स्ना निपातनात् ॥ ६२ ॥ भ०

प्राद्मयन्त पुष्पेषुं यस्यां वन्द्यः समाहृताः ।
परिमोहयमाणाभी राक्षसीभिः समावृताः ॥ ६३ ॥
यस्यां वासयते सीतां केवलं स्म रिपुः स्मरात् ।
न त्वरोचयतात्मानं चतुरो बुद्धिमानपि ॥ ६४ ॥

---

प्रादेत्यादि । यस्यां वन्द्यः समाहृताः समानीताः पुष्पेषुं कामं प्राद्मयन्त शमितवत्यः तन्मतस्याचरणात् । कोदृश्यः परिमोहमाणाभिः व्यामोहयन्तोभिः राक्षसीभिः परिवृताः दमिपरिमुह्योः अणावित्यादिना प्राप्तस्य परस्मैपदस्य नपादमीत्यादिना प्रतिषेधे णिचश्चेत्यात्मनेपदम् ॥ ६३ ॥ ज० म०

प्रादेत्यादि । यस्यामशोकवनिकायां समाहृताः आनीताः एकत्र कृता वा वन्द्यो हठहृताः स्त्रियः पुष्पेषुं कामं प्राद्मयन्त प्रशमितवत्यः अतिदुःखात् यतः परिमोहयमाणाभिर्व्यामोहयन्तोभिः राक्षसीभिः समावृताः परिवृताः दमुपरिमुह्योरणि प्राणिघाढ़ाच्चेति पे प्राप्ते पूर्ववत् मम् ॥ ६३ ॥ भ०

यस्यामित्यादि । रिपुर्दशाननः स्मरात् कामाद्धेतोः केवलं निष्फलं यस्यां सीतां वासयते स्म वासितवान् न त्वरोचयत् आत्मानं नैवात्मानमुपरोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि बुद्धिमानपि सम्पन्नोऽपि रोचिवास्योरणावित्यादिना प्राप्तस्यापि च परस्मैपदस्य नपादमोति प्रतिषेधे णिचश्चेति तङ् ॥ ६४ ॥ ज० म०

यस्यामित्यादि । यस्यामशोकवनिकायां रिपुर्दशाननः स्मरात् कामात् केवलं सीतां वासयते स्म वसतिं कारयति स्म न तु आत्मानं तस्यै अरोचयत रोचितवान् चतुरोऽपि योषिदाराधनकुशलोऽपि बुद्धिमानपि स्मरशास्त्रज्ञानवानपि वसश्चोरणि प्राणिघाढ़ाच्चेति पे प्राप्ते पूर्ववन्मम् ॥ ६४ ॥ भ०

मन्दायमानगमनो हरितायत्तरूं कपिः ।
द्रुमैः शकशकायद्भिर्मारुतेनाट सर्वतः ॥ ६५ ॥

---

मन्देत्यादि । कपिः सर्वतः सर्वत्र तामाट विजहार यत्तदोर्नित्यसम्बन्धात्तामिति गम्यते मन्दायमानगमनः मन्दीभवद्गमनः । कीदृशीं हरितायत्तरूं शाद्वलीभवद्वृक्षां अप्राणिजातेश्चेत्यूङ् द्रुमैरुपलक्षिताम् । कीदृशैः शकशकायद्भिः शकस्वभावैः शकीभवद्भिः केन मारुतेन अलामन्दं मन्दं भवति अहरिता हरिता भवन्तीति लोहितादित्वात् क्यष् अशका: शका भवन्तीति वाक्ये अव्यक्तानुकरणादिति डाच् तस्मिन्विषयभूते डाचि बहुलं द्वे भवतः नित्यमाम्रेडिते डाचीति पररूपत्वं डाजन्तात् शकशकाशब्दात् क्यष् वाक्यष् इति परस्मैपदं आत्मनेपदञ्च ॥ ६५ ॥ ज० म०

मन्देत्यादि । कपिः सर्वतः सर्वत्र तामशोकवनिकामाट बभ्राम कीदृशः मन्दायमानगमनः अमन्दं मन्दं भवति मन्दायमान तादृशं गमनमस्येति विग्रहः भृशादिभ्य च्व्यर्थे इति क्यः ङित्त्वान्तं तां कीदृशीं हरितायत्तरूं हरिद्वर्णीभवद्वृक्षां अहरिता हरिता भवन्ति हरितायन्तस्तादृशास्तरवो यत्र डाज्लोहितादेरिति च्व्यर्थे क्यः पक्षे पञ्च मारुतेन वायुना शकशकायद्भिः शकत्शकदिति शब्दं कुर्वद्भिः द्रुमैरुपलक्षितां द्रुमैः करणभूतैराटेति वा शकदित्यनुकरणशब्दात् नैकाचोऽव्यक्तानुकरणादिति डाच् द्वित्वञ्च तलोपोऽत इति प्रकृतेर्द्वे च तलोपः अशकशका: शकशका भवन्तीति डाज्लोहितादेरिति च्व्यर्थे क्यः पक्षे पञ्च शकदित्यस्य शब्दवाचकस्यापि लक्षणया तद्वृत्ति वृक्षे वृत्तिः ॥ ६५ ॥ म०

अस्यन्दन्निन्दुमणयो व्यरुचन् कुमुदाकराः ।
अलोठिषत वातेन प्रकीर्णाः स्तवकोच्चयाः ॥ ६६ ॥
सीतान्तिके विवत्सन्तं वर्त्स्यत्सिद्धिं प्लवङ्गमम् ।
पतत्त्रिणः शुभा मन्द्रमानुवानास्त्वजिह्लदन् ॥ ६७ ॥

---

अस्येत्यादि । चन्द्रोदयादिन्दुमणयः अस्यन्दन् स्यन्दन्ते स्म तामाटेति योज्यं व्यरुचन् कुमुदाकराः विराजितवन्तः स्तवकोच्चयाः गुच्छराशयः वातेन प्रकीर्णाः इतस्ततो विच्छिप्ताः सन्तः अलोठिषत लुठन्ते स्म सर्वत्र द्युद्भ्यो लुङीति विभाषा परस्मैपदं द्युतादयश्च क्लृपूपर्य्यन्ताः ॥ ६६ ॥ ज० म०

अस्येत्यादि । इन्दुमणयश्चन्द्रकान्ता अस्यन्दन् स्रवन्ति स्म चन्द्ररश्मिभिरित्यर्थात् यस्यां तामाटेति सम्बन्धो बोध्यः यस्यां कुमुदानामाकराः उत्पत्तिस्थानानि व्यरुचन् विरेजुः यस्यां स्तवकोच्चयाः पुष्पगुच्छसमूहा वातेन प्रकीर्णाः इतस्ततो विच्छिप्ताः सन्तो अलोठिषत लुलुठुः सन्दूङ्वल्लस्रुतौ रुच्लङ् प्रीतिप्रकाशयोः ल्टलुठ्ङवादिवत् एषां ङित्त्वादात्मनेपदे सिद्धे शासुलिद्द्युत्पुषादेरिति द्युतादित्वात् टौ पे ङविधानं तेनैव पं अतएव द्युतादिभ्यासुभयपदित्वं गम्यते परे तु लुङि द्युतादेरिति सूत्रेण विकल्पेनात्मनेपदमाहुः ङे स्यन्देर्नलोपाभावो बाहुल्यात् देवीदासचक्रवर्त्ती तु शासुलिद्दुग्रदित्यादौ ग्लुचुर्नेवेष्टसिद्धौ ग्लुचूपादानेन ङे क्वचित् नलोपाभावो ज्ञापित इत्याह । केचित्तु क्वचिदात्मनेपदिनोऽपि परस्मैपदित्वं स्यादिति ज्ञापनाय द्यां रूपं दर्शितमित्याहुः । अलोठिषतेति मान्तोऽदनत इत्यतादेशः ॥ ६६ ॥ भ०

सीतेत्यादि । सीतासमीपे विवत्सन्तं वर्त्तितुमिच्छन्तं प्लवङ्गमं वर्त्स्यत्सिद्धिं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनलक्षणा

वर्त्तिष्यमाणमात्मानं सीता पत्युरिवान्तिके ।
उदपश्यत्तदा तथ्यैर्निमित्तैरिष्टदर्शनैः ॥ ६८ ॥

---

यस्य वृद्भ्यः स्यसनोरिति विभाषातिप् तं पक्षिणः शुभाः प्रशस्ताः अजिह्लदन् सुखयन्तिस्म णिचि लुङि चङि रूपम् । कीदृशाः मन्द्रं गम्भीरं मधुरमानुवाना वाश्यमानाः आङि-नुप्रच्छ्योरुपसंख्यानमिति तङ् णुस्तुतावित्यादादिकस्य पर-स्मैपदित्वात् ॥ ६७ ॥ ज० म०

सीतेत्यादि । शुभाः अनुकूलाः पतत्त्रिणः पक्षिणः प्लव-ङ्गमं हनूमन्तम् अजिह्लदन् आनन्दयामासुः ह्लादीङ्मोदने णौ ण्यां रूपम् । किं कुर्वन्तः मन्द्रं गभीरम् आनुवानाः उत्कण्ठा-पूर्वकं शब्दं कुर्वाणाः आङ्पूर्वो नौतिरुत्कण्ठायां शब्दे वर्त्तते विपराजीत्यादिना मम् । कीदृशं सीतासमीपे विवृत्सन्तं वर्त्तितुमिच्छन्तं वर्त्स्यन्ती भविष्यन्ती सिद्धिः सीतादर्शनरूपा यस्य तं शुभशब्देन भाविनीं सिद्धिमनुमाय कपेरानन्द इति ध्वनिः । वृद्भ्यो नेम्पे स्यसनोर्वात्वमे इति इम्निषेधः अतएव पं तेन वृतादेः स्यसनोरुभयपदित्वं गम्यते ॥ ६७ ॥ भ०

वर्त्तीत्यादि । सीतापि तदा तस्मिन् काले पत्युः रामस्या-न्तिके आत्मानं वर्त्तिष्यमाणमिव उदपश्यत् उत्प्रेक्षते स्म वृद्भ्यः स्यसनोरिति विभाषावचनात्तङ् निमित्तैश्चक्षुःस्पन्दना-दिभिः तथ्यैरविसंवादिभिः इष्टदर्शनैः इष्टार्थप्रकाशकैः दर्शन-मिति कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् ॥ ६८ ॥ ज० म०

वर्त्तीत्यादि । तदा तस्मिन् काले सीतापि पत्युः रामस्या-न्तिके वर्त्तिष्यमाणमिवात्मानं निमित्तैश्चक्षुःस्पन्दनादिभिरु-दपश्यत् उत्प्रेक्षितवती तथ्यैरविसंवादिभिः इष्टः प्रियो दृश्यते यैः करणेऽनट् इष्टं दर्शयन्तीति कर्त्तरि, वा इष्टस्य दर्शनं

निरवर्त्स्यन्न चेद्वार्त्ता सीताया वितथैव न।
अकल्प्स्यदुद्यतिः सर्वा हनूमानित्यचिन्तयत् ॥ ६९ ॥

आत्मनेपदाधिकारः।

वृक्षाद्वृक्षं परिक्रामन् रावणाद् बिभ्यतीं भृशम्।
अत्रोस्त्राणमपश्यन्तीमद्राक्षीज्जनकात्मजाम् ॥ ७० ॥

---

येभ्य इति वा वृतादेः पे स्यसनोरिम्निषेधः मे तु इम् भव-त्येव इवार्थोऽत्र सादृश्यं सम्भावना वा ॥ ६८ ॥ भ०

निरित्यादि। चेदिति यद्यर्थे यदि सीताया वार्त्ता न निरवर्त्स्यत् निर्वृतिं नायास्यत् तदा वृथैव निष्फलैव नोऽस्मा-कमुद्यतिः सर्वा अयमुद्यमः समुद्रलङ्घनादिकः अकल्प्स्यत् अभविष्यत् इत्येवं हनूमानचिन्तयत् क्रियातिपत्तौ लृङ् तत्र निरवर्त्स्यदिति वृद्भ्यः स्यसनोरिति विभाषापरस्मैपदं अकल्प्स्यदिति लुटि च क्लृप इति चकारात् स्यसनोरपि भवति विभाषापरस्मैपदं उद्यतिरिति यमेः स्त्रियां क्तिन् अनुदात्तेत्यादिना अनुनासिकलोपः। इत्यात्मनेपदपरस्मैपदा-धिकारः ॥ ६९ ॥ ज० म०

निरित्यादि। चेद्यदि सीताया वार्त्ता न निरवर्त्स्यत् न निष्पत्स्यते तदास्माकं सर्वा समुद्रलङ्घनादिरूपा उद्यतिरुद्यमो वितथैव निष्फलैव अकल्प्स्यत् अभविष्यत् इति हनूमान् अचिन्तयत् वृतादेः पूर्ववदुभयपदं अनिम् च थ्यां रूपं निष्पूर्वो वृतिर्निष्पत्त्यर्थः कृपूषङ्वल्लृच कल्पने कृपक्लृपोऽक्लृपादाविति क्लृपादेशः यमेः क्तौ वनतनाद्यनिमामिति मलोपः। इति परस्मैपदाधिकारः ॥ ६९ ॥ भ०

इतः प्रभृति कारकमधिकृत्याह। वृक्षादित्यादि। तां जनकात्मजां सीतां स कपिकुञ्जरोऽपश्यदिति वक्ष्यमाणेन

तां पराजयमानां स प्रीतेरक्ष्यां दशाननात् ।
अन्तर्दधानां रक्षोभ्यो मलिनां म्लानमूर्द्धजाम् ॥ ७१ ॥

---

सम्बन्धः वृक्षात् वृक्षं परिक्रामन् गच्छन् ध्रुवमपायेऽपादान-मित्यपादानसंज्ञायां पञ्चमी रावणात् बिभ्यतीं भृशं त्रस्यन्तीम् अत्यर्थं शत्रोः रावणाद्रक्षामपश्यन्तीं यतो भयन्ततः कुतो रक्षेति भीत्रार्थानामित्यपादानसंज्ञा अदृश्यः प्रच्छन्नो भूत्वा ऋदुपधेत्यादिना क्यप् ॥ ७० ॥ ज० म०

अथ कारकाधिकारः । वृक्षादित्यादि । तां जनकात्मजां कपिकुञ्जरोऽपश्यदिति तृतीयश्लोकेनान्वयः किं कुर्वन् अदृश्यो भूत्वा वृक्षादेकस्मादपरं वृक्षं परिक्रामन् गच्छन् । तां कीदृशीं रावणात् बिभ्यतीं त्रस्यन्तीं शत्रोः रावणात् त्राणं रक्षणम् अपश्यन्तीं यतोऽपायेत्यादिना सर्वत्रापादानत्वम् अपायः संश्लेषः अपाययोगे यच्छब्दोऽवधिवचनः यतो भीर्भयमित्यत्र यच्छब्दो भयहेतुवचनः तेन भयार्थयोगे भयहेतोरपादानत्वं त्राणं रक्षणं तच्च भीतस्य तेनात्रापि यच्छब्दोभयहेतुवचनः तेन त्राणार्थयोगेऽपि भयहेतोरपादानत्वं दृभृजुषेत्यादिना ऋदुङ्त्वात् दृशेः क्यप् ॥ ७० ॥ भ०

तामित्यादि । प्रीतेः रावणसम्बन्धिन्याः पराजयमानां विमुखीभवन्तीं पराजेरसोढ इत्यपादानत्वं असोढोऽर्थः प्रीतिः रक्ष्यां दशाननात् रावणविषये स्वयं निवार्य्यप्रसरां वारणार्थानामीप्सित इत्यपादानत्वं प्रवृत्तिविघातलक्षणया रक्षणक्रियया आत्मसम्बन्धिन्या दशाननस्य व्याप्तुमभिप्रेतत्वात् अन्तर्दधानां रक्षोभ्यः मा मां रक्षांसि द्राक्षुरिति ततश्चान्तर्द्धौ येनादर्शनमित्यपादानसंज्ञा अन्तर्द्धिनिमित्तं हि रक्षोभिरात्मनो-

रामादधीतसन्देशो वायोर्जातस्सुतां श्रुतां चताम्।
प्रभवन्तोमिवादित्यादपश्यत् कपिकुञ्जरः ॥ ७२ ॥

---

दर्शनस्यानीप्सितत्वात् मलिनां शरीरेण म्लानमूर्द्धजां मलिनकेशां बद्धवेणीत्वात् ॥ ७१ ॥ ज० म०

तामित्यादि। तां कीदृशीं प्रीतेः रावणसम्बन्धिन्या इत्यर्थात् पराजयमानां प्रीतिमसहमानामित्यर्थः यतोऽपायेत्यादौ पराजयोऽसहनं पराजयपदनिर्देशेन परापूर्वजेरसहनविषयीभूतो गम्यते पराजेरसोढे इति पाणिनिसूत्रदर्शनात् पराजेः सोढुमशक्यमिति क्रमदीश्वरसूत्रदर्शनाच्च अशक्त्या निवर्त्तनं वा पराजयः रावणप्रीतेः सकाशात् अशक्त्या निवर्त्तमानामित्यर्थः। यद्यपि प्रीतिं बुद्ध्या प्राप्य ततो निवर्त्तत इति बुद्धिकृतापाय एवापादानत्वं घटते तथापि पराजयेति कृतं प्रपञ्चार्थं दशाननात् रक्ष्यां रक्षणीयां त्राणार्थेऽपादानत्वं रक्ष्यां निवारणीयां वा तदा वारणार्थेऽपादानत्वं रक्षोभ्योऽन्तर्दधानां राक्षसकर्तृकदर्शनाभावेच्छया व्यवहितीभवन्तीं अन्तर्द्धावपादानत्वं अन्तर्द्धिर्व्यवधानं तच्च यदीयदर्शनाभावेच्छया तस्यापादानत्वं रक्षांसि विलोक्येति वा यवर्थे पञ्चमी मलिनां शरीरेण म्लानमूर्द्धजां मलिनकेशां वेणीबन्धात् मलशब्दात् फलादित्वात् गोत्वणमेधेत्यादिना इनः ॥ ७१ ॥ भ०

रामादित्यादि। सत्कृत्य अधीतसन्देशो गृहीतसन्देशः कपिकुञ्जरः आख्यातोपयोग इत्यपादानसंज्ञा रामस्याख्यातृत्वात् सावधानतया सन्देशग्रहणात् नियमपूर्वकविद्यावत् सन्देशग्रहणं वायोर्जात इति जनिकर्त्तुरित्यपादानसंज्ञा जन्यर्थस्य जन्मनः कर्त्ता हनूमान् तस्य वायुः प्रकृतिः कारणं च्युतस्मितां शोकाक्रान्तत्वात् प्रभवन्तीमिवादित्यात् भुवः

रोचमानः कुट्टष्टिभ्यो रक्षोभ्यः प्रत्तवान् श्रियम् ।
श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥ ७२ ॥

---

प्रभव इत्यनेन भवत्यर्थस्य सीतायाः कर्तृभूतायाः प्रथमत उपलभ्यमानत्वात् अतः प्रभव आदित्यः तस्यास्तेजस्वित्वात् ॥ ७२ ॥ ज० म०

रामादित्यादि । च्युतं स्मितं यस्याः शोकाक्रान्तत्वात् तां आदित्यात् प्रभवन्तीमिव उत्पन्नामिव प्रथमत उपलभ्यमानां वा एतेन तेजोऽतिशयो दर्शितः यतोऽपायेत्यादिना यतो भूरित्यपादानत्वं भूरुत्पत्तिः उत्पत्तितुल्यत्वलक्षणया प्रथमोपलम्भस्यानच्च बुद्धिसंश्लेषपूर्वकस्यापायस्य सत्त्वात् यतोऽपाय इत्यपादानत्वं वा यत्र प्रकाशनं प्रभुव इत्याधारस्यापादानत्वमिति श्रीपतिः । भुव आद्योपलम्भस्थानमित्यपादानसंज्ञार्थं क्रमदीश्वरसूत्रं ईदृशीं तां कपिकुञ्जरः कपिश्रेष्ठो हनूमान् अपश्यदित्यन्वयः । स कीदृशः रामादधीतसन्देशः गृहीतवाचिकः यत आदानमित्यपादानत्वं वायोर्जातः यतो भूरित्यपादानत्वम् ॥ ७२ ॥ भ०

रोचेत्यादि । तत्र तस्यामशोकवनिकायां राक्षसाधिपो रावणः आगात् आगतः रोचमानः कुट्टष्टिभ्यः त्यक्तत्रयीधर्मत्वात् ये कुट्टष्टयः कुबुद्धयः तान् स्वविषये स्पृहावतः कारयन्नित्यर्थः रुच्यर्थानां प्रीयमाण इति सम्प्रदानसंज्ञायां चतुर्थी रुचेरभिलाषस्य तत्रावस्थानात् कुट्टष्टयः प्रीयमाणाः रक्षोभ्यः श्रियं विभूतिं प्रत्तवान् कर्मणा यमभिप्रैतीति सम्प्रदानं ददातिक्रियया राक्षसानामभिप्रीयमाणत्वात् श्लाघमानः परस्त्रीभ्यः युष्मद्विषयेऽस्माकं श्लाघेति परकलत्राणि ज्ञापयितुमिषयन्

अशपत निह्नुवानोऽसौ सीतायै स्मरमोहितः ।
धारयन्निव चेतस्यै वसूनि प्रत्यपद्यत ॥ ७४ ॥

---

श्लाघह्नुङित्यादिना सम्प्रदानत्वं श्लाघया बहुमानेन ज्ञापयितु-मिष्यमाणत्वात् तासाम् ॥ ७३ ॥ ज० म०

कुलकम् । रोचेत्यादि । तत्र तस्यामशोकवनिकायां राक्ष-साधिपो रावण आगात् आगतः। कीदृशः कुदृष्टिभ्यो रोचमानः ये कुदृष्टयः कुबुद्धयः त्यक्तधर्मत्वात् तेभ्यो रोचमानस्तेषां प्रीति-मुत्पादयन् यस्मै दित्सेत्यादिना यस्मै रुचिरिति संप्रदानत्वं रुचिरभिलाषोत्पादनं तेन रुच्यर्थस्य कर्त्ता यस्य प्रीतिमुत्पा-दयति तस्य संप्रदानत्वमिति पर्य्यवसितोऽर्थः रक्षोभ्यः श्रियं प्रत्तवान् कृतसम्पत्तिदानः ग्यचस्तवेति दाञस्तादेशः यस्मै दित्सेति संप्रदानत्वं परस्त्रीभ्यः श्लाघमानः तासां श्लाघया तास्तोषयन् स्वकीयश्लाघां ता ज्ञापयन् वा तास्वात्मश्लाघां कथयन् वा यस्मै श्लाघार्थं इति सम्प्रदानत्वं यस्मै श्लाघार्थं इति श्लाघार्थेन यो ज्ञीप्स्यमानस्तस्य सम्प्रदानत्वमित्यर्थः ॥ ७३ ॥ भ०

अशपतेत्यादि । सीतायै निह्नुवानः क्रौर्य्यादिकं न मेऽ-स्तीति सीतां ज्ञापयितुमिषयन्नित्यर्थः तस्यै सीतायै अशप्यत् शपथं सीतां ज्ञापयितुमैषदित्यर्थः । किमित्येवमाह स्मरमो-हितः अत्र शपथापह्नुतिक्रियया सीतामाज्ञापयितुमिष्यमाण-त्वात् पूर्ववत् सम्प्रदानसंज्ञा । किञ्चास्यै सीतायै स्वामिनी-भूतायै वसूनि द्रव्याणि प्रत्यपद्यत अङ्गीकृतवान् धारयन्निव गृहीतवित्त इव अत्र धारेरुत्तमर्ण इति सीतायाः कयाचि-दुत्तमर्णया तुल्यत्वात् ॥ ७४ ॥ ज० म०

अशपतेत्यादि । असौ रावणः स्मरेण मोहितः सन् सीतायै

तस्यै स्पृहयमाणोऽसौ बहु प्रियमभाषत ।
सानुनीतिश्च सीतायै नाक्रुध्यन्नाप्यसूयत ॥ ७५ ॥

---

अशप्त शपथं मिथ्यानिरसनं तां ज्ञापयितुमिच्छति स्म स्वश-पथपूर्वकं वा किञ्चित् ज्ञापयितुमिष्टवान् शपथाशीर्गत्यनु-कार इति शपथे सं तस्यै निह्नुवानः कपटापह्नवेन सीतां स्वाभिप्रायं ज्ञापयितुमिच्छन् किञ्च एतस्यै सीतायै वसूनि धारयन्निव तत्सम्बन्धीनि धनानि आत्मनि स्थापयन्निव गृहीतवित्तोऽधमर्ण इव तस्यै वसूनि प्रत्यपद्यत दातुम-ङ्गीकृतवान् यस्मै दित्सेत्यादिना सर्वत्र सम्प्रदानत्वं शपह्नु-धात्वर्थयोगे यच्छब्दो ज्ञीप्स्यमानवचनः धार्य्यर्थयोगे यच्छब्द उत्तमर्णवचनः ॥ ७४ ॥ भ०

तस्य इत्यादि । असौ राक्षसाधिपः स्पृहयमाणः सीता-माप्तुमिच्छन् बहु प्रियमभाषत वक्ष्यमाणं स्पृहेरीप्सित इति स्पृहयतेः स्वार्थिकण्यन्तस्य प्रयोगे सीताया ईप्स्यमानत्वात् सानुनीतिश्च सानुनयः सीतायै नाक्रुध्यन् तां प्रति कोपं न कृतवान् नाप्यसूयत दोषाविष्करणलक्षणामसूयां न कृतवान् क्रुध्यतिसूयत्योर्दिवादिकयोरुदात्तेत्तङि तोर्लङिप्रयोगे क्रुध-द्रुहेत्यादिना सम्प्रदानत्वम् ॥ ७५॥ ज० म०

तस्यै इत्यादि । असौ रावणो बहुप्रियं वक्ष्यमाणं अभा-षत तस्यै सीतायै स्पृहयमाणः स्पृहां कुर्वन् यस्मै दित्सेत्या-दिना सम्प्रदानत्वं स्पृह्यर्थे यच्छब्द ईप्सितवचनः सानुनीतिः सानुनयः सन् सीतायै मा क्रुध्यत् न कोपं कृतवान् नापि असूयत दोषाविष्करणं नापि कृतवान् सूयोङसूतावित्यस्या-ने कार्थत्वात् इदं रूपं घ्यां कण्ड्वादावसूधातोर्घोटीथीष्वमित्यस्य

संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे!।
ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम्॥ ७६॥
शृखद्भ्यः प्रतिशृखन्ति मध्यमा भीरु! नोत्तमाः।

---

क्वचित् व्याभिचारादमोऽभाव इति केचित्। माप्यसूयतेति केचित् पठन्ति पूर्ववत् सम्प्रदानत्वम्॥ ७५॥ भ०

सङ्क्रुत्यादि। किं त्वं शुभाशुभे दिदृक्षुं द्रष्टुमिच्छुं मां हे मृगेक्षणे! संक्रुध्यसि क्रुधद्रुहोरुपसृष्टयोः कर्मेति कर्मसंज्ञा क्रुधेरुपसर्गेण युक्तत्वात्। कुतस्ते परिज्ञानं यत्परस्त्रीषु शुभाशुभं निरूपयसि अन्यच्च दुष्टाशयत्वात् अथ कथं मृषा संक्रुध्यामीति चेदाह ईक्षितव्यं परस्त्रीभ्यः का शुभा न शुभेति यदीक्षितव्यमीक्षणीयं तदयं स्वधर्मो रक्षसां राधीक्ष्योर्यस्य विप्रश्न इति सम्प्रदानसंज्ञा यतः स्त्रीविषये विविधस्य प्रश्नस्य क्रियमाणत्वात्॥ ७६॥ ज० म०

संक्रुत्यादि। किं प्रियमभाषतेत्याह हे मृगेक्षणे! त्वं शुभा न नेति द्रष्टुमिच्छन्तं मां किं मृषा त्वं संक्रुध्यसि क्रुधद्रुहोरुपसर्गे सम्प्रदानस्य कर्मत्वमिति केचित्। स्वमते स्वभावादिमौ सोपसर्गौ सकर्मकाविति दुर्गवाक्यमाहृतं क्रियाव्याप्यस्य कर्मत्वात्। परस्त्रीदर्शने युक्त एष क्रोधः कथं मृषेति चेदाह परस्त्रीभ्य ईक्षितव्यं विविधप्रश्नपूर्वकं तद्दर्शनं तासां शुभाशुभनिरूपणं वा कर्तव्यमित्ययं रक्षसां स्वधर्मः यस्मै दित्सेत्यादिना ईक्षार्थयोगे सम्प्रदानत्वं ईक्षिरत्र विविधप्रश्नपूर्वकदर्शनार्थः शुभाशुभपर्य्यालोचनार्थो वा॥ ७६॥ भ०

शृखदित्यादि। अनेनात्मना प्रभावं दर्शयति शृखद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामिति मध्यमाः प्रभवः प्रतिशृखन्ति ओमित्युपगच्छन्ति हे भीरु! नोत्तमा माहृशाः

गृणद्भ्योऽनुगृणन्त्यन्ये कृतार्था नैव मद्विधाः ॥ ७७ ॥

---

ते हि स्वातन्त्र्यात् स्वयमेव हितम्प्रतिपद्यन्त इति भावः प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्तेति सम्प्रदानसंज्ञा पूर्वस्याः प्रार्थनक्रियायाः प्रार्थयितुः कर्तृत्वात् अन्ये प्रभवोऽकृतार्थाः अलब्धलाभाः गृणद्भ्यः अनुग्राह्यस्य भृत्यस्य कस्यचिन्न स्तुतिं कुर्वद्भ्यो मन्त्रिभ्यः अनुगृणन्ति तान् प्रोत्साहयन्ति अनुगृणीत अनुगृणीतेति ममानुगतो भवतीति नैव मद्विधा अनुगृणन्ति कृतार्थत्वात् गृशब्द इत्यस्य प्रयोगे अनुर्प्रतिगृणश्चेति संप्रदानसंज्ञा गृणातेः स्तुतिक्रियापेक्षया कर्तृत्वात् ॥ ७७ ॥
ज० म०

आख्यदित्यादि। इदानीमात्मोत्कर्षः कथ्यते हे भीरु! आख्यद्भ्यः प्रार्थयमानेभ्यः स्वामिन्निदं क्रियतामित्युपदेष्टृभ्यो मध्यमा एव प्रभवः प्रतिश्रृखन्ति तैः प्रयुक्ताः सन्तस्तथा कर्त्तव्यमित्युपगच्छन्ति न तु मद्विधा मादृशाः उत्तमाः ते हि स्वातन्त्र्यात् स्वयमेव हिताहितं जानन्तीति भावः अन्ये ते अकृतार्थाः प्रभवो गृणद्भ्यः स्तुतिं कुर्वद्भ्य एव अनुगृणन्ति तैः प्रयुक्ता धनादिकं दातुमभ्युपगच्छन्ति स्वप्रसिद्धये स्तावकेभ्यो यच्छन्तीत्यर्थः न त्वेवं मद्विधाः स्वतः प्रसिद्धत्वेन परस्तुत्यनपेक्षत्वात् यस्मै दित्सेत्यादिना उभयत्र सम्प्रदानत्वम् अत्र चाप्रतिस्युप्रत्यनुग्रह्यार्थयोगे यच्छब्दो गम्यपूर्वक्रियाकर्तृवचन इति तु रामं वदन्तं प्रोत्साहयामासेत्यर्थः इत्यनेन सूचितम् अत्र हि प्रार्थनमेव पूर्वक्रिया गम्या तस्याः कर्त्ता आख्यच्छब्दः एवं स्तुतिकरणमेव पूर्वक्रिया गम्या तस्याः कर्त्ता गृणच्छब्दः
॥ ९७ ॥ भ०

इच्छ स्नेहेन दीव्यन्ती विषयान् भुवनेश्वरम् ।
सम्भोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियम् ॥ ७८ ॥
आस्स्व साकं मया सौधे मा धिष्ठा निर्जनं वनम् ।
मा धिवात्सीर्भुवं शय्यामधिशेष्व स्मरोत्सुका ॥ ७९ ॥

---

इच्छेत्यादि । ईदृशं पूजितं भुवनेश्वरं त्रिलोकविजयिन-मिच्छ अङ्गीकुरु आत्मानमुद्दिश्य स्नेहेन प्रेम्णा साधकतम-ङ्करणमिति करणसंज्ञा । दीव्यन्ती क्रीड़न्ती विषयान् शब्दादि-भिरित्यर्थः दिवः कर्म चेति करणसंज्ञापवादात् कर्मसंज्ञा सम्भोगाय परिक्रीतः त्वद्विषयभोगेन परिक्रीत इत्यर्थः परि-क्रयणे सम्प्रदानमिति सम्प्रदानत्वं तव नाप्रियं कर्त्तास्मि न करिष्यामि ॥ ७८ ॥ ज० म०

इच्छेत्यादि । भुवनानामीश्वरं मां त्वं स्नेहेन प्रेम्णा इच्छ अङ्गीकुरु साधनहेत्विति करणत्वम् । किं कुर्वती विषयान् दीव्यन्ती विषयैः स्रक्चन्दनादिभिः क्रीडन्ती दिवोधेवेति पक्षे करणे द्वितीया सम्भोगाय सम्भोगेन परिक्रीतो नियत-कालं त्वया सेवायै स्वीकृतोऽहं तवाप्रियं अहं न कर्त्तास्मि न करिष्यामि परिक्रियोधेवेति पक्षे करणे चतुर्थी ॥७८॥ भ०

आस्स्वेत्यादि । मया साकं सार्द्धं सौधे धवलगृहे आस्स्व तिष्ठ आसेर्लोटि रूपं आधारोऽधिकरणमित्यधिकरणसंज्ञायां सप्तमी मा धिष्ठा निर्जनं वनं अधिशीङ्स्थासां कर्मेत्यधिकरणे कर्मसंज्ञा लुङि रूपं मा धिवात्सीः भुवं भूमौ मा शयिष्ठाः माङि लुङि रूपं उपान्वध्याङ् वस इति अधिकरणे कर्मसंज्ञा किन्तु शय्यामधिशेष्व शीङो लोटि रूपं अधिशीङिति कर्म-संज्ञा स्मरोत्सुका कामार्थिनी ॥ ७९ ॥ ज० म०

आस्स्वेत्यादि । मया साकं सह सौधे धवलगृहे आस्स्व

अभिन्यविक्षथास्त्वं मे यथैवाव्याहता मनः।
तथाप्यध्यावसन्तं मां मा रौत्सीर्हृदयं तथा ॥ ८० ॥
मावमंस्था नमस्यन्तमकार्य्यज्ञे ! जगत्पतिम्।
संहृष्टे मयि काकुत्स्थमधन्यं कामयेत का ॥ ८१ ॥

---

तिष्ठ विलासङ् उपवेशे आमन्त्रणे प्रार्थने वा णौ कालभावाधारमित्याश्लेषाधारत्वं निर्जनं वनं त्वं मा धिष्ठाः निर्जने वने न तिष्ठ कर्मक्रियेत्यादिना अधिपूर्वस्य आधारस्य कर्मत्वं भूस्थेति सेर्लुक् णौकः स्तुस्तुभेत्यादिना षत्वं भुवं मा धिवात्सीः भूमौ मा शयिष्ठाः पूर्ववदधिवसेराधारस्य कर्मत्वं सत्वर इति तः स्मरोत्सुका कामासक्ता सती त्वं शय्यां अधिशेष्व पूर्ववदधिशीङ आधारस्य कर्मत्वम् ॥ ७९ ॥ भ०

अभीत्यादि। यथैव त्वमव्याहता अनिवारिता सती मे मम मनः अभिन्यविक्षथाः अभिनिविष्टासि लुङि रूपं नेविंश इति तङ् अभिनिर्विशश्चेत्यधिकरणे मनसः कर्मसंज्ञा तथा त्वमपि त्वद्धृदयमध्यावसन्तं मां मा रौत्सीः मा निवारय रुधेर्लुङि रूपं उपान्वध्येति हृदयस्य कर्मसंज्ञा ॥ ८० ॥ ज० म०

अभीत्यादि। यथैव येनैव प्रकारेण त्वमव्याहता मया अनिवारिता सती मम मनोऽभिन्यविक्षथाः अभिनिविष्टासि णौविश प्रवेशे विपराजीति सं शलइगुपधादनिटः क्सः इति सक् अभिन्यविशथा इति पाठे घौ पूर्ववदाधारस्य कर्मत्वं तथा तेनैव प्रकारेण तव हृदयमध्यावसन्तं मां त्वमपि मा रौत्सीः न निवारय मां हृदि कुर्विति भावः रुधिरौ आवरणे आवृतौ टौ पूर्ववदधिवसेराधारस्य कर्मत्वम् ॥ ८० ॥ भ०

मावेत्यादि। हे अकार्य्यज्ञे! सर्वावशेषज्ञे! मां जगत्-

यः पयो दोग्धि पाषाणं स रामाद्भूतिमाप्नुयात् ।
रावणं गमय प्रीतिं बोधयन्तं हिताहितम् ॥ ८२ ॥

---

पतिं नमस्यन्तं मावमंस्थाः लुङि रूपं कर्त्तुरीप्सिततममिति कर्मसंज्ञा अवमानक्रियया कर्त्तृसम्बन्धिन्या जगत्पतेराप्तुमिष्टत्वात् संदृष्टे मयि काकुत्स्थमधन्यं मन्दभाग्यं का कामयेत का इच्छेत् नैवेत्यर्थः तथा युक्तं चानीप्सितमिति कर्मसंज्ञा येनैव प्रकारेण कर्त्तुरीप्सिततमं क्रियया युक्तं तेनैवेप्सितादन्यस्य रामस्य प्रयुज्यमानत्वात् ॥ ८१ ॥ ज० म०

मावेत्यादि । हे अकार्य्यज्ञे ! अविशेषज्ञे ! नमस्यन्तं प्रणमन्तं जगत्पतिं मां त्वं मावमंस्थाः नावजानीहि जगन्नमस्योऽप्यहं त्वां नमस्यामीति नावज्ञा युक्तेति भावः। कर्मक्रियेति कर्मत्वं कर्मक्रियेत्यत्र कर्म क्रियाव्याप्यं तच्च चतुर्विधं प्राप्यनिर्वर्त्त्यविकार्य्यानीप्सितभेदात् इदन्तु प्राप्यं कर्म प्राप्तुमिष्टत्वात् तत्र पूर्वमवमननक्रियया जगत्पतिर्व्याप्यते पश्चान्नञ्योगेन वहिरङ्गेन न तन्निवृत्तिः नमः करोतीति नमस्तपोवरिव इति क्यः मयि संदृष्टे सति अधन्यं मन्दभाग्यं काकुत्स्थं रामं का कामयेत् इच्छेत् । इदमनीप्सितं कर्म ॥८१॥ भ०

यः पेत्यादि । यथा पाषाणात् पयो न सम्भवति तथा रामादपि विभूतिरिति नैराश्यं दर्शयति पयसः पूर्वेणैव कर्मसंज्ञा पाषाणस्याकथितञ्चेत्यनेन रावणं गमय प्रीतिं भवत्या सह प्रीतिं गच्छन्तं गमय प्रीतिं स्वयमेव हिताहितं भवतीं बुध्यमानां बोधयन्तं गतिबुद्धीत्यादिना कर्मसंज्ञा गतिबुध्योरण्यन्तावस्थायां तयोः कर्त्तृत्वात् ॥ ८२ ॥ ज० म०

य इत्यादि । यः पाषाणं पयो दोग्धि पाषाणेन हेतुना पयो निःसारयति स एव रामाद्भूतिं प्राप्नुयात् सम्भावनयां

प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयम् ।
किं विलापयसेऽत्यर्थं पार्श्वे शायय रावणम् ॥ ८३ ॥
आज्ञां कारय रक्षोभिर्मां प्रियाण्युपहारय ।

---

स्त्री यथा पाषाणात् पयो न सम्भवति तथा रामादपि भूति-रिति भावः याच्ञार्थेत्यादिना दुहो द्विकर्मकत्वं पाषाणमिति कर्महेतोः कर्मत्वं पय इति निर्वर्त्यं कर्म तस्मात् रावणं मां प्रीतिं गमय प्रापय हितञ्चाहितञ्च बोधयन्तं भवतीमित्यु-त्तरश्लोकस्थमिहानुषज्यते . घोऽबौजेरिति गतिज्ञानार्थयोः प्रयोज्यकर्त्तुः कर्मत्वम् ॥ ८२ ॥ भ०

प्रीत इत्यादि । अहं प्रीतः सन् भुवनत्रयं तत्समुत्थं भोज्यं भोक्तुं योग्याम्भवतीं भोजयिष्यामि प्रत्यवसानार्थत्वात्कर्मसंज्ञा प्रत्यवसानमभ्यवहारः अकर्त्तभिप्राये णिचश्चेत्यात्मनेपदं न भवति विलपन्तं विविधं भाषमाणं किं विलापयसेऽत्यर्थं नाहं त्वामिच्छामीति ब्रुवाणा अत्र शब्दकर्मकत्वात् कर्म-संज्ञा कर्त्तभिप्राये णिचश्चेत्यात्मनेपदं तस्मादिदं प्रार्थये पार्श्वे रावणं शायय अत्राकर्मकत्वात् कर्मसंज्ञा ॥ ८३ ॥ ज०म०

प्रीत इत्यादि । अहं प्रीतः सन् भवतीं त्वां भुवनत्रयं भोजयिष्यामि भुवनत्रयसम्बन्धिसुखोपभोगो भुवनत्रयभोगेन लक्ष्यते पूर्ववदशनार्थस्य प्रयोज्यकर्त्तुः कर्मत्वं किं रावणं मां अत्यर्थं विलापयसे विविधं भाषयसि शब्दार्थत्वात् प्रयोज्यस्य कर्मत्वं तस्मादिदं प्रार्थये मां पार्श्वे शायय स्वापय प्रार्थनायां गी शीङोऽकर्मकत्वात् प्रयोज्यस्य कर्मत्वम् ॥ ८३ ॥ भ०

आज्ञामित्यादि । रक्षांसि त्वदाज्ञां कुर्वन्त्येव कारय प्रियाणि च त्वत्सम्बन्धीनि मामुपहरन्तमुपहारय उत्पादय हृक्रोरन्यतरस्यामिति कर्मसंज्ञा शक्रेण कृतं विरचितं अश्व-

कः शक्रेण कृतं नेच्छेदधिमूर्द्धानमञ्जलिम् ॥ ८४ ॥

इति कारकाधिकारः ।

वचनं रक्षसां पत्युरनुक्रुद्धा पतिप्रिया ।
पापानुवसितं सीता रावणं प्राब्रवीद्वचः ॥ ८५ ॥

---

लिमधिमूर्द्धानं अधिगतः प्राप्तो मूर्द्धा येनेति को नेच्छेत् स्वतन्त्र इति कर्त्तृसंज्ञा शक्रेण प्रणतोऽहमित्यर्थः प्रयोज्यकर्त्ता नोदाहृतो ग्लानावस्थायामुदाहृतत्वात् । इति कारकाधिकारः ॥ ८४ ॥ ज० म०

आज्ञामित्यादि । रक्षोभिराज्ञां कारय तान्याज्ञाकरणाय प्रेरय मां प्रियाणि अभिलषणीयानि उपहारय प्रियाण्युपहर्त्तुमानेतुं मां प्रेरय हृतमाभिवादिदृशस्तुवेति प्रयोज्यस्य विकल्पेन कर्मत्वं कर्मत्वाभावपक्षे साधनङ्केतिव्यादिना कर्त्तरि तृतीया । को जनः शक्रेण कृतं विरचितं अधिमूर्द्धानमञ्जलिं न इच्छेत् अपि तु सर्व एवेच्छति इन्द्रेणाहं प्रणतः त्वामपि मत्प्रियामसौ नमस्करिष्यतीति भावः मूर्द्धानमधिगतः प्राप्तः अधिमूर्द्धा अधिगतो मूर्द्धा येनेति वा अत्र स्वतन्त्रकर्त्तोदाहृतः औप्रयोज्यकर्त्ता दर्शित एव स्वर्थेत्यादिना उक्तकर्त्तरि प्रथमा कर्त्ता क्रियामुख्यः प्रयोजकश्च । इति कारकाधिकारः ॥ ८४ ॥ म०

इतः प्रभृति कर्मप्रवचनीयमधिकृत्याह । वचनमित्यादि । रक्षसां पत्युः रावणस्य वचनमनु लक्ष्यीकृत्य अनुर्लक्षण इति कर्मप्रवचनीयसंज्ञायां द्वितीया क्रुद्धा सती सीता पतिप्रिया पतिः प्रियो यस्या इति रावणं प्राब्रवीद्वचो वक्ष्यमाणं पापानुवसितं पापेन संयुक्तं तृतीयार्थं इत्यनेन

न भवाननु रामश्चेदुपशूरेषु वा ततः ।
अपवाह्य छलाद्वीरौ किमर्थं मामिहाहरः ॥ ८६ ॥

---

कर्मप्रवचनीयसंज्ञायां द्वितीया पापमन्ववसितइति द्वितीयेति योगविभागात् सः सुप्सुपेति वा ॥ ८५ ॥ ज० म०

अथ कर्मप्रवचनीयाधिकारः । स च ऊमते धिक्समये-त्यादिसूत्रसमूहनिर्दिष्टविभक्त्यधिकारः । वचनमित्यादि । पतिः प्रियो यस्याः सा सीता रक्षसां पत्युः रावणस्य वचन-मनु लक्ष्यीकृत्य तेन हेतुना वा क्रुद्धा सती रावणं वचो वक्ष्य-माणं प्राब्रवीत् । रावणं कीदृशं पापानुवसितं पापमनु पापेन सह वसितं सम्बद्धमिति द्वितीयासमासः षिन्गञ् बन्धे अव-पूर्वात् क्तः वातो वाप्योरिति अवस्यालोपः धिक्समये-त्यादिना अनुयोगे द्वितीया वीप्सेत्यम्भावचिह्नेऽभिस्तेषु भागि परिप्रती । अनुस्तेषु सहार्थे च हीनेऽनूपौ मताविहेति वीप्सा-दिसम्बन्धं द्वितीया वक्ति अभ्यादयो द्योतका अनुरत्र चिह्नार्थे सहार्थे च चिह्नं लक्षणं हेतावप्यनुयोगे द्वितीयेति केचित् ॥ ८५ ॥ भ०

नेत्यादि । यदि भवान्नानुरामं रामान्न हीन इत्यर्थः हीन इत्यनेन कर्मप्रवचीयसंज्ञा अनुशब्दस्य स्वहीनार्थद्योतकः हीनस्योत्कृष्टापेक्षः उपशूरेषु वा शूरेभ्यो वा यद्यधिको भवान् उपोऽधिके चेति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा यस्मादधिकमित्यनेन सप्तमी उपशब्दस्याधिकद्योतनात् किमर्थं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतो नीत्वा मामिहाहरः लङ्कामानीतवान् ॥ ८६ ॥ ज० म०

नेत्यादि । किं प्राब्रवीदित्याह । चेद्यदि भवान् अनु-रामं रामात् हीनो न भवेत् यदि वा उपशूरेषु शूरेभ्यो यद्य-

उपशूरं न ते वृत्तं कथं रात्रिञ्चराधम !।
यत् सम्प्रत्यपलोकेभ्यो लङ्कायां वसतिर्भयात् ॥ ८७ ॥
आरामदर्शनात् पाप ! विद्योतस्व स्त्रियः प्रति।
सद्वृत्ताननुदुर्वृत्तः परिस्त्रीं जातमन्मथः ॥ ८८ ॥

---

धिको भवान् तदा किमर्थं किं निमित्तं कनकमृगच्छलेन वीरौ रामलक्ष्मणौ अपवाह्य अन्यतो नीत्वा त्वं मामिहाहरः लङ्कायामानीतवानसि समर्थो हि जित्वैवानयति हृञो घौ पूर्ववदनुयोगे द्वितीया अनुरत्र हीनार्थे अधिकेशार्थोपाधिभ्यामिति अधिकार्थोपयोगे सप्तमी ॥ ८६ ॥ भ०

उपेत्यादि। हे रात्रिञ्चराधम ! कथं ते वृत्तं चरितं नोपशूरं शूरेभ्यो न हीनं उपोऽधिके चेति चकाराद्धीने उपशब्दस्य कर्मप्रवचनीयसंज्ञा यत् यस्मात् सम्प्रत्यधुना भयाल्लङ्कायां जलपर्वतदुर्गायां वसतिः वसिरतिवसिवर्त्तिभ्यश्चेत्यौणादिकः अपलोकेभ्यो लोकान् वर्जयित्वा अपपरीवर्जन इति कर्मप्रवचनीयसंज्ञायां पञ्चम्यपाङ्परिभिरिति पञ्चमी ॥ ८७ ॥ ज० म०

उपेत्यादि। हे रात्रिञ्चराधम ! कथं ते तव वृत्तं चरितं नोपशूरं शूरेभ्यो न हीनं शूरशब्दोऽत्र लक्षणया शूरवृत्तवाची धिक्समयेत्यादिना द्वितीया उपोऽत्र हीनार्थे यत् यस्मात् सम्प्रति भयाद्धेतोरपलोकेभ्यो लोकान् वर्जयित्वा लङ्कायां जलपर्वतदुर्गायां तव वसतिर्निवासः अन्यारभ्येत्यादिना अपयोगे पञ्चमी अपस्त्यागार्थे आङ्व्याप्तिसीम्नोस्त्यागेऽन्यौ प्रतिदाननिधौ प्रतीति अन्यौ पर्य्यपौ ॥ ८७ ॥ भ०

आरेत्यादि। हे पाप ! आरामदर्शनात् रामदर्शनं यावत् आङ्मर्य्यादावचनेन पूर्ववत्पञ्चमी स्त्रियः प्रति योषितो लक्षीकृत्य विद्योतस्व शोभस्व लक्षणेत्थंभूतेति कर्मप्रवचनीयत्वं

अभिद्योतिष्यते रामो भवन्तमचिरादिह ।
उद्गूर्णबाणः संग्रामे यो नारायणतः प्रति ॥ ८९ ॥

---

परिस्त्रीं जातमन्मथः अत्र वीप्सायां कर्मप्रवचनीयत्वम् ॥ ८८॥ ज० म०

आरामेत्यादि । हे पाप ! दुराचार ! आरामदर्शनात् रामदर्शनं यावत् स्त्रियः प्रति लक्ष्यीकृत्य विद्योतस्व शोभस्व पूर्ववत् सीमार्थाङ्योगे पञ्चमी धिक्समयेत्यादिना चिह्नार्थप्रतियोगे द्वितीया । त्वं कीदृशः सद्वृत्तान् सदाचारान् अनुदुर्वृत्तः दुश्चरित्रः सदाचारेषु कथञ्चित् प्रकारं द्रोहादिकमापन्नो दुर्वृत्तो भवसीत्यर्थः पूर्ववदित्यम्भावार्थानुयोगे द्वितीया इत्यम्भावः कस्यचित् प्रकारस्यापत्तिः स्त्रीः परि लक्ष्यीकृत्य स्त्रीषु कथञ्चित्प्रकारं विहारित्वादिकमापन्नो वा जातकामः पूर्ववच्चिह्नार्थे इत्यम्भावार्थे वा परियोगे द्वितीया वीप्सायां परिशब्दस्य कर्मप्रवचनीयत्वमिति जयमङ्गला न युक्ता वीप्सायां द्वित्वं लोकतः प्रसिद्धमिति टीकायामुक्तत्वात् क्वचित् सम्बुद्ध्यन्तमिदं विशेषणद्वयं दृश्यते ॥ ८८ ॥ भ०

अभीत्यादि । भवन्तमभि भवन्तं लक्ष्यीकृत्य अभिरभाग इति कर्मप्रवचनीयत्वं अचिरादिह लङ्कायां रामो द्योतिष्यते असह्यतेजा भविष्यति य उद्गूर्णबाणः उद्यतबाणः सङ्ग्रामे नारायणतः प्रति तेन तुल्यः प्रतिनिधिः प्रति प्रतिनिधीति प्रतिनिधौ कर्मप्रवचनीयत्वं प्रतिः प्रतिनिधि प्रतिदाने च यस्मादिति पञ्चमी प्रतियोगे पञ्चम्यास्तसिः मुख्यसदृशः प्रतिनिधिः ॥ ८९ ॥ ज० म०

अभीत्यादि । भवन्तमभि लक्ष्यीकृत्य रामोऽचिरादिह लङ्कायां द्योतिष्यते असह्यतेजा भविष्यतीत्यर्थः पूर्ववत् चिह्नार्था-

कुतोऽधियास्यसि क्रूर ! निहतस्तेन पत्रिभिः ।
न सूक्तं भवतात्युग्रमतिरामं मदोद्धत ! ॥ ९० ॥
परिशेषं न नामापि स्थापयिष्यति ते विभुः ।
अपि स्थाणुं जयेद्रामो भवतो ग्रहणं कियत् ॥ ९१ ॥

---

भियोगे द्वितीया यो रामः संग्रामे उद्गूर्णबाणः उद्यतकाण्डः सन् नारायणतः प्रति तेन तुल्यः अन्यारभ्येत्यादिना प्रतिनिध्यर्थप्रतियोगे पञ्चमी प्रसक्तेरिति पञ्चम्यास्तस् ॥ ८९ ॥ भ०

कुत इत्यादि। हे क्रूर ! तेन रामेण उद्गूर्णबाणेन पत्रिभिः शरैः निहतः सन् कुतोऽधियास्यसि केन प्रकारेण निःसरिष्यसि अधिपरी अनर्थकाविति अधेः कर्मप्रवचनीयसंज्ञा धात्वर्थव्यतिरेकेणार्थस्यानभिधानादनर्थकत्वं संज्ञा च गत्युपसर्गसंज्ञाबाधनार्था तेन तिङि चोदात्तवतीति निघाताभावो द्रष्टव्यः पञ्चमी च प्रश्नाख्यानयोरित्युपसंख्यानात् भवति किमिति हनिष्यतीति चेत् यतो भवता न सूक्तं प्रशस्तमुक्तं सुः पूजायामिति कर्मप्रवचनीयत्वं गतिरनन्तर इति स्वराभावः अत्युग्रमतिरौद्रं अतिरामं राममधिक्षिप्य काकुत्स्थमधन्यमिति अतिरतिक्रमणे चेति कर्मप्रवचनीयत्वं चकारात् पूजायाञ्च तत्र चाप्युक्तमिति प्रयोगः हे मदोद्धत ! ॥९०॥ ज० म०

कुत इत्यादि। हे क्रूर ! तेन रामेण संग्रामे पत्रिभिः शरैर्निहतः सन् कुतस्त्वं अधियास्यसि सर्वतोभावेन कस्मात् निःसरिष्यसि हे मदोद्धत ! अतिरामं राममतिक्रम्य अवक्षिप्य अत्युग्रं अतिरौद्रं भवता न सूक्तं न शोभनमुक्तं रामाक्षेपकं तव पूर्ववचनं मिथ्यैवेति भावः धिक्समयेत्यादिना अतियोगे द्वितीया ॥ ९० ॥ भ०

परीत्यादि। रामो विभुः प्रभुः ते परिशेषं नामापि

